॥ मयूरेश्वरस्तोत्रम् ॥

श्री गणेशाय नमः ।
सर्वे उचुः ।
परब्रह्मरूपं चिदानन्दरूपं परेशं सुरेशं गुणाब्धिं गुणेशम् ।
गुणातीतमीशं मयूरेशवंद्यं गणेशं नताः स्मो नताः स्मो नताः स्मः ॥ १॥

जगद्वन्द्यमेकं पराकारमेकं गुणानां परं कारणं निर्विकल्पम् ।
जगत्पालकं हारकं तारकं तं मयूरेशवंद्यं नताः स्मो नताः स्मः ॥ २॥

महादेवसूनुं महादैत्यनाशं महापूरुषं सर्वदा विघ्ननाशम् ।
सदा भक्तपोषं परं ज्ञानकोशं मयूरेशवंद्यं नताः स्मो नताः स्मः ॥ ३॥

अनादिं गुणादिं सुरादिं शिवाया महातोषदं सर्वदा सर्ववंद्यम् ।
सुरार्यंतकं भुक्तिमुक्तिप्रदं तं मयूरेशवंद्यं नताः स्मो नताः स्मः ॥ ४॥

परं मायिनं मायिनामप्यगम्यं मुनिध्येयमाकाशकल्पं जनेशम् ।
असंख्यावतारं निजाज्ञाननाशं मयूरेशवंद्यं नताः स्मो नताः स्मः ॥ ५॥

अनेकक्रियाकारकं श्रुत्यगम्यं त्रयीबोधितानेककर्मादिबीजम् ।
क्रियासिद्धिहेतुं सुरेन्द्रादिसेव्यं मयूरेशवंद्यं नताः स्मो नताः स्मः ॥ ६॥

महाकालरूपं निमेषादिरूपं कलाकल्परूपं सदागम्यरूपम् ।
जनज्ञानहेतुं नृणां सिद्धिदं तं मयूरेशवंद्यं नताः स्मो नताः स्मः ॥ ७॥

महेशादिदेवैः सदा ध्येयपादं सदा रक्षकं तत्पदानां हतारिम् ।
मुदा कामरूपं कृपावारिधिं तं मयूरेशवंद्यं नताः स्मो नताः स्मः ॥ ८॥

सदा भक्तिं नाथे प्रणयपरमानंदसुखदो
यतस्त्वं लोकानां परमकरुणामाशु तनुषे ।
षडूर्मीनां वेगं सुरवर विनाशं नय विभो
ततो भक्तिः श्लाघ्या तव भजनतोऽनन्यसुखदात् ॥ ९॥

किमस्माभिः स्तोत्रं सकलसुरतापालक विभो
विधेयं विश्वात्मन्नगणितगुणानामधिपते ।
न संख्याता भूमिस्तव गुणगणानां त्रिभुवने
न रूपाणां देव प्रकटय कृपां नोऽसुरहते ॥ १०॥

मयूरेशं नमस्कृत्य ततो देवोऽब्रवीच्च तान् ।
य इदं पठते स्तोत्रं स कामान् लभतेऽखिलान् ॥ ११॥

सर्वत्र जयमाप्नोति मानमायुः श्रियं पराम् ।
पुत्रवान् धनसम्पन्नो वश्यतामखिलं नयेत् ॥ १२॥

सहस्रावर्तनात्कारागृहस्थं मोचयेज्जनम् ।
नियुतावर्तनान्मर्त्यो साध्यं यत्साधयेत्क्षणात् ॥ १३॥

इति श्रीगणेशपुराणे उत्तरखण्डे बालचरित्रे मयूरेश्वरस्तोत्रं सम्पूर्णम् ।